* श्रीरामः *

# सनातनसौभाग्यम्

रचयिता

कविराजाशुकविः

पं० नित्यानन्द शास्त्री

प्रकाशकः -

श्री सनातनधर्म सम्मेलन-कार्यालय

जोधपुरम् ।

विक्रम सम्वत् १९९८

॥ श्रीरामः ॥

# सनातन-सौभाग्यम्

(शिष्यैः सोमदत्तादिभिरनुगम्यमानः प्रथमं प्रविशति विष्णुशर्मो-
पाध्यायः )

उपाध्याय-सौम्याः पूर्वं पञ्चदेवतानां मङ्गलमाचरत ।

शिष्या-यथाज्ञापयति उपाध्यायः (इति ते साञ्जलि मङ्गलमंचरन्ति)

१-शुभमृद्धिसिद्धियुक्तं प्राग् मङ्गलार्थ उक्तम् ।
सकलान्तरायमुक्तं गणनायकं नमामः ॥

२-कविताकलाप्रदात्रीं सुरभारतीयधात्रीम् ।
विधिसुप्रसादपात्रीं श्रीशारदां नमामः ॥

३-जगदेकनाट्यकारं तत्केलिसूत्रधारम् ।
सश्रीनटीविहारं हरिमादिमं नमामः ॥

४-कृतकामरङ्गभङ्गं धृतमौलिभूतगङ्गम् ।
गौरीगणेशसङ्गं श्रीशंकरं नमामः ॥

५-जगदेकसाक्षिभूतं सुतरामनूरुसूतम् ।
यः संपुनात्यपूतं तं सूर्यमानमामः ॥

उपाध्यायः—वत्सा ! अद्य अस्मत्सुहृदा नित्यानन्देन निर्मितं सनातनसौभाग्यं नाम खण्डनाटकं नाटयितव्यम् । अपि नाम सज्जा यूयम् ?

---

१ एतत् खण्डनाट्यं श्रीदर्वीरसंस्कृतपाठशाला-प्रधानाध्यापक-श्रीविष्णु शर्माचार्य-प्रबन्धेन तदीयच्छात्रैः संमेलनसंमुखेऽभिनीतम् ।

( नेपथ्ये )—

ओषधिनाथ—रुचीव सुपक्षे
या ववृधे, ऽद्य तु भाति विपक्षे।
भव्यसनातनधर्म—कथा सा
संह्रसतेऽपिच संस्कृतभाषा ॥

[ इति पुनः पुनः पठति ]

उपाध्यायः—( श्रुत्वा ) किमिदं कर्णकटु श्रूयते ? अनुकूलपक्षे चन्द्रकान्तिरिव या वृद्धिं गता, विपरीते पक्षे विराजमाने सति सैव सनातनधर्मकथा, अपिच संस्कृतभाषा ह्रासं प्राप्नोतीति भावात्मकेन पद्येन को मां कोपयति संतापयति च। सौम्य सोमदत्त ! कोयं मधुरमधुरं दोधकं मुहुर्मुहुर्सुखेन आवर्तयति ? अन्वेष्यैनमत्रानय।

सोमदत्तः—एतद् मधुरमधुरं मोदकं तु मदर्थं भवदर्थं चात्र अवश्यमानायनीयम्।

उपा०—बधिर ! दोधकं, न तु मोदकम्।

सोमदत्तः—

[ स्वगतम् ] घृतशर्करामिश्रितं मृष्टान्नं मोदकं, तदेव प्रगाढीकृतदुग्धमयं 'दोधक' नाम्ना व्यवह्रियेत नाम ? तत्तु तक्रमर्थयमानस्य विडालस्य दुग्धलाभसौभाग्यम्। तर्हि इतो द्रुतमपसरामि, हरामि च तस्मादेकाकी एव सकलानि दोधकानि। [ प्रकाशम् ]

उपाध्याय ! अद्य प्रातरेव तातपादैर्निर्दिष्टे कर्मणि व्यापृत आसम्, अतोऽस्नात्वैव भवत्सेवायामागतोऽस्मि । क्षुधा च मां नितान्तं बाधते यदि भवाननुमन्येत, तर्हि दोधकावर्तिनस्तस्मात् पञ्चषाणि दोधकानि गृहीत्वा कल्यावर्तमाचरेयम् ।

उपाध्यायः—अरे मूढ ! दोधकं वृत्तं भवति ।

सोम—आम्, आम् ! वृत्तं (वर्तुलं) तु सद्य एव निगीर्यते गलेन । अतएव सुवर्तुला गुटिकेव औषधस्य क्रियते वैद्य वरैः ।

उपा—अरे जड़ ! अत्र वृत्तं नाम च्छन्दो नतु वर्तुलम् ।

सोम—मान्यवर ! ज्ञातं मया,स्वच्छन्दचारिणा मया यथाच्छन्दमाचरणीयमिति भवत आशयः ।

उपा०—(सभ्रभङ्गम्) श्रुतबोधे त्वया दोधकनाम्नश्छन्दसः पाठो न पठितः कच्चित् ?

सोम०—नैव पठित । गुरो क्षम्यताम् । तद्दिनेऽहं मोदकान् खादितुं गत आसं मातामहमन्दिरे । तस्मिन्नेव दिवसे भुक्त्वा समागच्छन्नहं उपाध्यायिकया प्रदत्तं भवतश्चोलकलग्नं यज्ञोपवीतं आनीतवानासम् ! कच्चित् स्मरति भवान् ?

उपा०—( करचपेटां दर्शयन् ) दुरात्मन् ! नासीत्तद् ब्रह्मसूत्रं किन्तु पञ्जिकानां पुञ्जनसूत्रम् । एषोऽहं चपेटिकां ते दत्वाऽपसारयामि ।

सोम०—यदि दोधकं नाम मोदकं नास्ति । तर्हि तत्स्थापनार्थं पेटिकायाः काऽऽवश्यकता ? ।

उपा० - ( चपेटिकया ) अज्ञ ! शीघ्रमपसर ।

सोम० — क्षम्यताम्, क्षम्यताम् । एषोऽनुसरामि भवदाज्ञाम् । ( इति वदन् द्रवति )

( ततः प्रविशति पौरस्त्य-पाश्चात्य वेषधारिभ्यां पितापुत्राभ्यामनुगम्यमानः सोमदत्त-)

सोम — पूज्यपादाः ! अभिवादये । एष वृद्धो ब्राह्मणदेव उच्चारयन्नासीत्तद् दोधकपद्यम् । भवदाशयं श्रुत्वाऽयं महाभागः स्वपुत्रं रविदत्तं सह गृहीत्वा आगतोऽस्ति ।

वृद्धः — [वृद्ध सपुत्रः प्रणम्य] अद्यानुगृहीतोऽस्मि आह्वानेन ।

उपा — अद्य एतदाशयं पद्यं कथमुच्चार्यते मुहुर्मुहुर्भवता ?

वृद्ध — भगवन् ! एष भवदन्तेवासी रविदत्तः प्रदत्तशास्त्रिपरीक्षो भवदीयां पाठशालां त्यक्त्वा लब्धपाश्चात्यशिक्षः पाश्चात्यवेषधारी स्वच्छन्दमाचरति । नाद्रियते च पठितां संस्कृतभाषाम् । पञ्चमवर्जं तवर्गस्थाने च टवर्गमेवोच्चारयति । विस्मृतान्येव नाम तानि वर्णान्यनेन । तेनायं काक इव परपोषकः उन्नदति । ननु परपुष्टः कोकिल इव कलं कलयति । न खलु मातरमिव भगवतीं संस्कृतभाषां सेवते । न च स्वसारमिव स्व-सारं मन्यते राष्ट्रभाषाम् । किं नाम भगवती सुरभारती श्रीभगवतीलालविदुषा सहैव स्वर्गता । किं नाम द्विवेदिना श्रीमहावीरप्रसादेन सममेव तादृशः प्रसाधितः प्रसादोऽपि राष्ट्रभाषायाः सुरपुरं प्रस्थितः ? हा हन्त ! किं नाम विधिना विचेष्टितं पुरतश्च चेष्टनीयम् ?

उपा०-अरे रविदत्त किं कथयन्ति तातपादा ?

रविदत्तः [ सांजलिबन्धम् ] श्रूयतां गुरवः ! यदाहं उत्तीर्ण-शास्त्रि-परीक्षोऽपि प्रयतमानोऽपि न कापि प्राप्नवं वृत्तिम्, तदा बद्धपरिकरोऽभ्यस्तवानस्मि इंग्लिशभाषाम्। उत्तीर्ण-वानस्मि च वर्षत्रयेण मैट्रिकपरीक्षाम्। आसादयं च रेलवे-कार्यालये मासिकीं विंशतिरूप्यकात्मिकां वृत्तिम्। न च स्थानीय वेषं धारयन् प्राप्तो वैतनिकीमुन्नतिम्। तदा हितेच्छुनैकेन प्रियसुहृदोपदिष्टोऽङ्गीकृतवास्मि पाश्चात्यं वेषम्। तेन तुष्टो मदीयोऽध्यक्षः कुर्वन्नस्ति प्रतिवर्षं मे वेतनोन्नतिम् अधुना वर्ततेऽशीतिरूप्यकात्मकं मासिकं मदीयं वेतनम्। अहह ! न लभ्यते कोऽप्यवसरः संस्कृतसंलापस्य। हिन्दी-भाषिभिश्च हिन्दी व्यवहरामि। किं बहुना, मारवभाषा भाषिभिः सह मारवभाषामेवोपयुञ्जे। ममैष सिद्धान्त श्रूयताम् –

( वेषोपचारोऽस्तु युगानुसारो, मनोविचारस्तु शुचिप्रकारः।
विवर्तते वृत्तिदशैव नूनं, सनातनी धर्मदशा तु नैव ॥ )

उपाध्यायः-वत्स ! तत्तु सम्यक् ! [ करेण तदीयं टोपंस्पृशन् अतुं आटोपं कुतो धरसि ? शिरोवेष्टनं टोपिकां वा न बिभर्षि ?

रवि [ किंचिद् विहस्य ] नैव। यतः टोपिका स्त्रीत्वनिदर्शिनी शिरोवेष्टनं क्लीबत्वनिदर्शनम्। इति भावनया ते उभे, अपि शिरसि नो दधामि।

उपाध्यायः—[ सस्मितम् ] वत्स ! प्रगल्भोऽसि । परमेन आटोपं कथं परिधत्से ?

रवि—भगवन् आटोपस्य आकारस्तु एष साक्षादस्त्येव । अतः आटोपस्य आकारं दूरीकृत्य टोपमात्रमेव धरन् जगति ख्यापयामि, यदेष आटोपस्य आकारः ।

उपा—[विहस्य] निपुणक ! विदग्धतरोऽसि । परं आटोपमपि किं धत्से ।

रवि—किंच, गुरो ! श्रूयताम् एभिस्तात पादैः प्रतिदिनं प्रायः कीर्त्यमानं मरुभाषामयं कीर्तनम्—

रामजी संसारी दुख काटो, प्रभुजी ओ भारी दुख काटो ।टेक। हे भगवान ! सबर रो साथी मांगे कोरो आटो, तू करणा कर देवे उणंर साथ लगावण खाटो ॥ रामजी ॥ फेर दयारो पार नहीं है, पाणी रो भर माटो, रैवण ने तो घास फूसरो सरग दूसरो टाटो ॥ रामजी ॥ जिणमें ठंडो छायां बैठां, एक न आवे छांटो, भजन-हथाई भगत करे तो चपटो चौड़ो भाटो ॥ रामजी ॥ धाड़ायत जो धाड़ो मारे, तो धनवान ही न्हाटो ॥ वां सेठांरे घरे धानरो धनरो लाटो लाटो ॥ रामजी ॥ भगतां रे घर किणी बातरो नहि हे आटो-साटो । बन्दारे घर आ जावे तो लादै कोरो ठाटो । रामजी फेर मिले तो टूटो पाटो नहिं तो कपड़ो फाटो । धाड़ैती ! धणियां रे धावो दो, क्यों बांध्यो घाटो ॥ रामजी ॥ नित आनन्द सू मिले अठै तो तो भगवत रस रो चाटो ॥ राम ॥

उपाध्याय०—यदि संतोषवृत्तिरपि पूर्वं पिष्टकपर्यायं 'आटो' नामक पदार्थं याचते, तर्हि 'आटो' पातीति आटोपोऽपि तदर्थं धार्य एव।

उपा० साधु सौम्य! साधु। अप्रतिम-प्रतिभोऽसि। चिरायुर्भव। ननु वत्स! सन्तोषवृत्तय एव संस्कृतमनुरज्यन्ति, नान्ये।

वृद्ध०-तथापि भगवन्! सनातनधर्मरक्षार्थं तन्मूलकयोः संस्कृत-व्यवस्थित राष्ट्रभाषयो रक्षणार्थं तूपायः करणीय एव।

उपा०—एवम्, एवम्।

( पितापुत्रौ प्रणम्य निर्गतौ )

उपा०– ( स्वगतम् ) अहह! यदि सनातनधर्मस्तत्प्रकाशमूलं संस्कृतभाषा च ह्रसत तर्हि महाननर्थ आपतेदिति तत्प्रतीकारार्थं प्रयतनीयऽेव कथं नष्टा स्यादियं मे चिन्ता। आं ज्ञातम्। अहरहरुपास्यमानं भगवन्तं ब्रह्माणं सुर-सरस्वतीसहितमत्रामन्त्रये। स मे चिन्तां हरिष्यति। करिष्यति च स एव सकलं मङ्गलम्। तत् समाधिमनु-प्रविशामि। ( समाधिप्रवेशं तन्मोक्षणं च नाटयति ) अहो! एष स्मृतमात्र एवोप स्थतो भक्तमनोरथविधाता धाता। भगवत्या सुरसरस्वत्या सह। तदर्घ्यादि सज्जया मि ( तथा कृत्वा पठति )

जयति वेदविधानविकासनः, कमलकान्तमुखः कमलासनः।
दिशतिवाक् किल यस्य चतुष्फलं, सुचतुरा चतुराननिर्गता।

( इति पठित्वा नत्वा च अर्घ्यं पाद्यमासनं चार्पयति )

ब्रह्मा —सौम्य ? सिध्यतु समीहितं भवतः । कथय, कुतोऽहं स्मरणपथमानीतः ? कस्ते मानसस्तापः । त्वरितं निवेदय । एषोऽपहरामि ।

उपा० —सनातनधर्मः संस्कृतं च सहैव ह्रसते । यत एष श्लोको मुहुर्मुहु रत्र केनापि भूदेवेन पठ्यमानोऽद्यैव श्रुतः ।

तथाहि - ( तमेव श्लोकं पठति )

ब्रह्मा - वत्स । कोऽयममाङ्गलिकं प्रलपति सनातनधर्मो देववाणी च ह्रासं गच्छतीति । यतः—

धर्मः सनातनो ह्याज्ञा विश्वेशस्य जगत्पितुः ।
तत्पालका ह्रसेरन्तु, कदाप्याज्ञा ह्रसेत नो ।

किञ्च - यावत् सनातनो धर्मस्तावत् संजीवि संस्कृतम् ।
यावच्च संस्कृतं लोके तावद् धर्मः सनातनः ॥

अपिच - यस्या ओमिति रक्षकास्त्रिजगतां प्राणाश्च, वेदा मुखं,
गायत्री हृदयं, गलोऽमलगिरां हेतुश्च शाब्दं श्रुतम् ।
ज्योतिर्वैद्यकशास्त्रकं भुजयुगं, काव्यं ह्युरोजद्वयं,
वागूजालं त्वपरं परा अवयवा, नश्येन्न सा दिव्यवाक् ।

उपा - भगवन् ! एतेन वचनामृतेन आप्यायितं मदीयं हृदयम् । पुनरेवोज्जीवितोऽस्मि । पित्रोः कुशलसारेण समाचारेण ।

ब्रह्मा—अतीव सौभाग्यं मरुधरेश्वरीयस्य प्रजाजनस्य । यत्तदीये वर्तमाने राज्ये विजयध्वजो भगवतः सनातनधर्मस्योत्तरोत्तरमुन्नतिमेव लभते न पुनरवनतिम् । भगवत्या अमर भारत्या अपि जयपताका समुच्छ्रिताऽस्ति । धार्मिक महाराजप्रभावेण श्रेष्ठिवरश्रीमगनीरामबांगडादयोऽपि

एतादृशेषु शुभकर्मसु स्वकीयं हार्दिकं सहयोगं ददतीति सुमहान् प्रमोदावसरः।

उपा०—भगवन्! एतत्सर्वं राजराजेश्वरस्य राठौडकुलतिलकस्य मरुधरेश्वरस्य श्रीउम्मेदसिंहदेवस्य प्रजाजनपुण्योपार्जितं कृपावैभवमस्माभिरुपभुज्यते। तथाहि—

यद्राज्ये चतुरैश्चिकित्सकवरैश्चञ्चाश्चिकित्सालयाः।
पर्यङ्के धनिका इवाप्यधनिनो रोगातुराः शेरते।
शोभन्ते शुभपाठकैः पटुतरैः पूर्णाश्च पाठालया,
धारायन्त्रजलेन खेलति गृहे पानीयहारिण्यपि,

ब्रह्मा—सौम्य! राज्ञ एतान्येव कर्माणि सनातनधर्ममर्माणि।

अपिच--

यदीयराज्ये प्रभवन्ति यागा जपा अनुष्ठान-महाश्च पाठाः।
संमेलनादीनि च कोषवित्तैरुम्मेदसिंहः स चिराय जीव्यात्॥

किञ्च—सनातन धर्मप्रचारमूलकस्य संस्कृतस्य रक्षणार्थं पाठमन्दिरम्। तथाहि—

श्रीमत संस्कृतपाठमन्दिरवरं यद्राजधान्यामिदं
चञ्चच्चन्दनचारुचर्चितमहाभालैः सुबालैर्भृतम्।
सूत्रोद्घोष–समुत्पतद्–रत–रत–स्त्रीकूजि पारावतं
ज्यौतिर्वैद्यक–कर्मकाण्डरसिनामाशां पुपूर्षु स्थितम्॥

किं बहुना—संस्कृतरक्षां द्रढयितुं नवीनतया तच्छात्रालयोऽपि संस्थापितः। तथाहि—

बहिर्वासाश्छात्रा अपि बहुलयात्राव्ययभियः
इहैत्योच्चैःशिक्षामय-परमभिक्षामियुरिति ॥
सुविज्ञप्तेश्छन्दादिव पतिरमन्दायतभुजा –
मिवाकार्षीच्छात्रावसतिमतिमात्रां शिखरिणीम् ।

उपा – अनेन महाराजशिरोमणिना यानि यानि प्रजाहितावश्यकानि कर्माणि, तानि तानि स्वकीये राज्ये समुपस्थाप्यन्ते ।

ब्रह्मा – तर्हि वृद्धब्राह्मणेन उच्चार्यमाणं पद्यं निःशेषं व्याख्यानेन विवेचितं संपन्नम् । शृणु । ( तदेव पद्यं पुनः पठति ।
अतो मरुधराराज्ये नहि सनातनधर्मो ह्रसते,न पुनः संस्कृतमपि । अपि च यदुपमानवाक्यमत्र निर्दिष्टं,यदोषधिनाथरुचिः चन्द्र कान्तिरिव सुपक्षे सितपक्षे, ववृधे, सा विपक्षे कृष्णपक्षे संह्रसते, एतेन ओषधिनाथानां वैद्यानां रुचिः सुपक्षे प्राक्तनभूपतीनां साहाय्ये ववृधे, साऽधुना विपक्षे तद्विरोधिनि असहाय्ये ह्रसते इति योऽपरोऽर्थ आसते । सोऽपि प्रस्तुते राज्ये तु न संघटते । वैद्यमहासंमेलनाधिवेशनादिषु राजकोषत परमसाहाय्यापादनात् । उत्तरोत्तरप्रचारार्थं वैद्यकशास्त्राध्ययनप्रबन्धस्य करिष्यमाणत्वात् । एवं सुपक्षेऽर्थात् सितपक्षे चन्द्रकान्तेर्वृद्धिः कृष्णपक्षे च तस्या ह्रास इत्यर्थरहस्यविज्ञान-संपादकं भूगोल-खगोलज्ञानं ज्योतिःशास्त्रेण संबध्यते । तज्ज्योतिःशास्त्रं सनातनधर्मपोषकं कर्मकाण्डं च पाठयितुमाशास्यत एव । तर्हि मरूधरीयाणां वः को नाम विषादावसरः ?

उपा० – भगवन् ! भवत्कृपया सर्वत्रैव भारते भवतु साम्राज्यं सनातनधर्मसंस्कृतयोरित्याशास्यते ।

ब्रह्मा – वत्स ! अनेन महाराजेना चरितानि चरितानि भूपतिभिरितरैरपि यदानुकरिष्यन्ते तदा सर्वत्रानयोः साम्राज्यं संपत्स्यत एव ।

उपा – परमेष्ठिन् । तथाऽस्तु भगवत्कृपया ।

ब्रह्मा – सौम्य ! इदानीं भारतभारतीसहितां मातरं सुरसरस्वतीं संमानय । यतः समासीदति अस्माकं प्रतिप्रस्थान वेला ।

उपा – भगवन् । एष तथा करोमि ।

जयति जयति वेदारण्यपूरिण्यखेदा
कविहृदयतरङ्गासङ्गिनी दिव्यगङ्गा ।
जयति जयति माता कोविदानां श्रदाता
मधुररसविलासावासभूर्दिव्यभाषा ॥

अपिच –

मातुः सुरसरस्वत्या अरविन्दीकृतां सुताम् ।
मिलिन्दीभूय वन्देऽहं हिन्दीमिन्दीवरेक्षणाम् ॥

[ ततश्छत्रौ नीराजयतः ]

जय जय सुर भाषे, ननु जय जय सुरभाषे !
सुरसदनादवताये सुराजसि भारतसुखवासे,
ज्ञानसुधारसवर्षमनुग्रहमाप्य ससुखमासे ।
मानसमेवमनुक्षणमिच्छति, भवतीं समुपासे,

त्वमपि सुतं सुनिरीक्ष्य सुतुष्यसि संगतमुल्लासे।
त्वं यदि नैषि नयनपथमेष तु पश्यति हाऽऽकाशे।
तत्र सुकृपा-सुलता फलिताऽभूदादिकवौ व्यासे।
सुविकासेन बभासे भासेऽपिच कालीदासे।
सैव कथं फलिता भवतान्नहि नित्ये पद-दासे ॥जय०॥

जय भारतभाषे ! जय राष्ट्रियभाषे ! जय हिन्दीभाषे !
तू है जनित्र, सुपालित, लालित संस्कृत सरिता से।
नलिनी ज्यों फलिनो, हो प्रमुदित अलिनी जनता से।
सुरभाषा तो भूख भगाती, यदि हम हों प्यासे।
तो तू हरती प्यास सुधा ला, उस सुर गङ्गा से
तुलसी, सूर, केशवादिक कवि तेरी सुकृपा से—
होकर सफल सूर्य–सम, शशि–सम जगमें परकासे।
जिनकी अजर अमर गुणगाथा गाते गुरुता से।
पूत करो अब नित्य पूतको शुभ दृग-धारा से ॥जय०॥

उभे-सौम्याः ! सुखजीविनो भवत।

ब्रह्मा—अहो ! रमणीयता संस्कृ भाषाश्रितस्य संगीतस्य।
अतएवाऽधुनापि गीयते कीर्तिर्जयदेवादिकवीनाम्।
भगवत्यौ ! युवामपि स्वकर्तव्यं कर्माचरतम्।

भारतभा—भगवन् पितामह ! भवति सर्वज्ञे विश्वविश्रुते विराज-
मान के आवाम् ?

देव ! न जाने कर्म वा सारवन्तु शुभ-कर्म ।
सर्वज्ञाता जानते कर्माकर्म—सुमर्म ॥

ब्रह्मा-दिष्ट्या भगवती भारतभरात्यपि मातुः कृतज्ञतां दर्शयन्ती संस्कृत हिन्दी भाषयोः समानरूपं दोहाच्छन्दः प्रयुक्तवती । धन्याऽसि वत्से !

संस्कृत-भगवन् ! भवदग्रे आवां किं कथयाव ? अस्मादृग्भिरपि, भवत्प्रसादोऽपेक्ष्यते नितराम्, तद् भवानेव प्रमाणं शुभ-प्रवचने ।

तथापि अनतिक्रमणीयं भवदादेशं पालयावः । ( इति मिथः संमुखीभूय पठतः )

सं०—ज्ञानं खेलतु मानसे सुमनसां हंसो यथा मानसे,
भा०—सारे साधन ज्ञानसे उदित हों, सद्-रत्न ज्यों खान से ।
सं०—संमानं च सतां सभासु सुतरां संयान्तु सांगीतिकाः,
भा०—माता संस्कृत से सदा सरस हो संगीत भी रीति का ॥
सं०—संगीतं नरभाषयाऽस्तु, जनता रज्येद् भृशं भारती,
भा०—माता तो कहती यथार्थ, पर मैं उर्दू मिले, हारती ।
सं०—संसार-व्यवहार-भौतिक-विधौ युक्ताऽस्तु वाग् भारती,
भा०—जो हो संस्कृत दैविकाऽऽत्मिककथा, तो मैं करूँ आरती
उपा०—हृदयविकासनार्थं मुखवासनार्थं च तावत्ताम्बूलमानये ।
उभे०—नापेक्ष्यते तत् । शृणु शृणु—

सं० गायत्र्या हृदयं मुखं विमलयन् भूयाद् द्विजन्मा सुखी,
भा०—चाहे हो जपमालिका, न अथवा, चाहे न हो गोमुखी।
सं०—शक्यं तद् यदि नो, रजेत् तदुभयं श्रीरामनामाऽप्यहो,
भा०—दोनों को बस, राम नाम रंगता, ताम्बूल हो वा न हो॥

उपा०—अस्तु, मातः भारतभारति! अस्मदूरक्षार्थमपि किंचिन्निवेदय सं कृतमातरम्।

भा—अस्तु।

मा! रक्षा कर भक्त-बाल जनकी, तू एक माता-पिता,
सं०—धर्मो रक्षति रक्षितः किल यथा, रक्षाम्यहं रक्षिता।
भा०—मासे बालक बाल बाल बचते, मा को न हो आपदा,
सं—श्रद्धा बालजनस्य या गुरुजने, सैवाऽस्ति रक्षा सदा॥

भा०-एतद् भगवत्या आदेशहृदयं पुनरहं स्फुटीकरोमि; श्रूयताम्

क्या शिष्ट—व्यवहार है, समझिए, कैसा सदाचार है,
स्वामी—सेव्यनुसार है जग-कथा, जो धर्मका द्वार है।
श्रद्धा-रक्षण-भार है स्वजन पै, जो भक्ति—उद्गार है।
पूरा रक्षण—भार है स्वपति पै, सारा यही सार है।

उपा०—अस्मदीयश्रद्धा रक्षिता भगवती अवश्यं धर्मावस्था इव अस्मान् रक्षिष्यतीति निष्कर्षो ज्ञातः। अतीवाऽनुगृहीताः स्मः।

सोम—( अवसरे प्रविश्य हिन्दी प्रति ) अपराधक्षमार्थनापूर्वकं प्रार्थये।

कोई यों कहते कि हिन्दि ? तुमको है मागधी ने जना।
भा०—हां जो हैं अपशब्द-गर्दभ, उन्हें है मा-गधी ने जना।
रानीके बन बैठतीं प्रसवकी बेला कई दाइयां।
गङ्गा से नहरें बने तक कई होतीं न क्या खाइयां ? ॥

उपाध्याय—ःप्राक् सर्वानहं धन्यवादपात्रीकरवाणि—

धन्यो ब्रह्मा प्रथममुदिता यन्मुखाद्दिव्यभाषा।
धन्यैषा याऽजनयदमलां भारतीं राष्ट्रभाषाम् ॥
धन्यैषाऽपि ह्यनुचरति या मातरं तत्कृतज्ञा।
तद् धन्याः स्मो वयमपि तु तद्दर्शनानन्दभाजः ॥

ब्रह्मा—अस्तु। विष्णुशर्मन्! सिद्धं भवत्समीहितम्। किमधुनाऽवशिष्टम्! तथापि भरत वाक्येन प्रवच्मि शुभम्।

राजानः सुखिनः सन्तु वसन्तु ससुखं प्रजाः।
नित्यानन्दः सुमनसां मनःसु परिवर्धताम् ॥

॥ निर्गताः सर्वे ॥

—शम्—

---

मुद्रक—कुँ० सरदारमल थानवी,
श्री सुमेर प्रिंटिङ्ग प्रेस, फुल्ला रोड़ जोधपुर.